# Vajrapanjara Upanishad

# वज्रपञ्जरोपनिषत्

## Document Information

Text title : vajrapanjaropaniShat

File name : vajrapanjaropaniShat.itx

Category : upanishhat, shiva, upanishad

Location : doc_upanishhat

Proofread by : Kasturi navya sahiti kasturinsahiti at gmail.com

Description-comments : aprakAshitA upaniShadaH

Latest update : March 20, 2020

Send corrections to : Sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

March 20, 2020

*sanskritdocuments.org*

Vajrapanjara Upanishad

# वज्रपञ्जरोपनिषत्

सह नाववतु-इति शान्तिः ।
वज्रपञ्जरेण भस्मधारणं कुर्यात् । वामकरे भस्म गृहीत्वा
सद्योजातमिति पञ्चब्रह्ममन्त्रैः । त्रियम्बकं जातवेदसे गायत्र्या
मानस्तोकैरभिमन्त्र्य मूलेन सप्तवारमभिमत्र्य श्रीविद्येयं शिरसि ।
ऐं वद् वद् वाग्वादिनि ह्स्रैः क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु ।
हसकलरी ॐ मोक्षं कुरु कुरु । ह्सौः इति मुखे । ॐ ॐ नमो भगवति
ज्वालामालिनि देवदेवि सर्वज्ञानं हारिके जातवेदसि ज्वलन्ति ज्वलन्ति
प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र ज्वालामालिनि हुं फट् स्वाहा
इति हृदये । जलवासिन्यै नमो नाभौ । ह्रीं वह्निवासिन्यै नमो गुह्ये ।
ॐ सह...नाभ्यादिजान्वन्तम् । ॐ ह्रीं श्रीं पशु हुं फट् स्वाहा
जान्वादिपादपर्यन्तम् । ॐ ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुररूप
तट तट चट चट प्रचट प्रचट कह कह वम वम बन्धय
बन्धय घातय घातय हुं फट् स्वाहा हत्यघोरेण शिरसि ।
ॐ वैष्णव्यै नमो हृदये । पुनः अघोरेण पृष्ठे ।
पुनः सुदर्शनेन जान्वादिनाभ्यन्तम् । पुनः पाशुपतेन पादादिजान्वन्तम् ।
ह्सौः अ अं क्षं शौः । ॐ ह्रीं क्लीं क्ष्रौं श्रीम् ॥

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

श्रीं क्ष्रौं श्रीं ह्रीं ॐ इति दक्षिणबाहौ । ॐ क्षां ॐ नमो भगवते
नारसिंहाय ज्वालामालिने तीक्ष्णदंष्ट्राग्निनेत्राय सर्वरक्षोघ्नाय
सर्वज्वरविनाशाय सर्वभूतविनाशाय दह दह पच पच रक्ष रक्ष
हुं फट् स्वाहा इति वामबाहौ ।
उत्तिष्ठ पुरुष हरितपिङ्गळ लोहिताक्ष देहि मे दापय स्वाहा ।
ॐ ह्रीं दुं उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितम् ।
यदि शक्यमशक्यं वा ते भगवति शमय शमय स्वाहा ॥

मृत्योस्तुल्यं त्रिलोकीं ग्रसितुमतिरसान्निस्सृता किं नु जिह्वा
किं वा कृष्णाङ्घ्रिपद्मसृतिभिररुणिता विष्णुपद्याः पदव्यः ।
प्राप्ताः सन्ध्याः स्मरारेः स्वयमुत नुतिभिस्तिस्र इत्यूह्यमानाः
देवैर्देव्यास्त्रिशूलक्षतमहिषजुषो रक्तधारा जयन्ति ॥

इति बडबानलदुर्गामृत्योस्तुल्यवनदुर्गाभिः सर्वाङ्गमुद्धूळयेत् ।
ततः शेषभस्मनि जलं निक्षिप्य त्रिपुण्ड्रधारणं कुर्यात् ।
एता एव महाविद्या विभूतेरभिधारणे ।
कथिताः परमेशानि सतां पूर्वतराघहाः ॥

वज्रपञ्जरनाम्नैव यः कुर्याद्भस्मधारणम् ।
स सर्वभयनिर्मुक्तः साक्षाच्छिवमयो भवेत् ।
पूतानि तानि श्रीमन्त्रपवित्रे यानि भस्मनि ॥

दग्धकामाङ्गविभूतित्रैपुण्ड्रितानि कथितानि ललाटपट्टे लोपयन्ति
दैवलिखितानि दुरक्षराणि ॥

(शैव-उपनिषदः)

इति वज्रपञ्जरोपनिषत् समाप्त ।

Proofread by Kasturi navya sahiti

*Vajrapanjara Upanishad*

pdf was typeset on March 20, 2020

Please send corrections to *sanskrit@cheerful.com*